# श्रीयन्त्रोद्धारकमङ्गलाष्टकम्

भीमसेनविरचितम्

यन्त्रोद्धारकनामको रघुपतेराज्ञां गृहीत्वार्णवं
तीर्त्वाशोकवने स्थितां स्वजननीं सीतां निशाम्याशुगः ।
कृत्वा संविदमङ्गुलीयकमिदं दत्वा शिरोभूषणं
सङ्गृह्यार्णवमुत्पपात हनूमान् कुर्यात् सदा मङ्गलम् ॥ १॥

प्राप्तस्तं सदुदारकीर्तिरनिलः श्रीरामपादाम्बुजं
नत्वा कीशपतिर्जगाद पुरतः संस्थाप्य चूडामणिम् ।
विज्ञाप्यार्णवलङ्घनादिशुभकृन्नानाविधं भूतिदं
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ २॥

धर्माधर्मविचक्षणः सुरतरुर्भक्तेष्टसन्दोहने
दुष्टारातिकरीन्द्रकुम्भदलने पञ्चाननः पाण्डुजः ।
द्रौपद्यै प्रददौ कुबेरवनजं सौगन्धिपुष्पं मुदा
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ३॥

यः किर्मीर-हिडिम्ब-कीचक-बकान् प्रख्यातरक्षोजनान्
संहृत्य प्रययौ सुयोधनमहन् दुःशासनादीन् रणे ।
भित्वा तद्धृदयं स घोरगदया सन्मङ्गलं दत्तवान्
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ४॥

यो भूमौ महदाज्ञया निजपतेर्जातो जगज्जीवने
वेदव्यासपदाम्बुजैकनिरतः श्रीमध्यगेहालये ।
सम्प्राप्ते समये त्वभूत् स च गुरुः कर्मन्दिचूडामणिः
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ५॥

मिथ्यावादकुभाष्यखण्डनपटुर्मध्वाभिधो मारुतिः
सद्भाष्यामृतमादरान्मुनिगणैः पेपीयमानं मुदा ।
स्पृष्ट्वा यः सततं सुरोत्तमगणान् सम्पात्ययं सर्वदा
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ६॥

पाकार्कार्कसमानसान्द्रपरमासाकीर्ककाकारिभि-
र्विद्यासार्कजवान्रेरितरुणा पीतार्कचक्रः पुरा ।
कङ्कार्कानुचरार्कतप्तजरया तप्ताङ्कजातान्वितो
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ७॥

श्रीमद्व्यासमुनीन्द्रवन्द्यचरणः श्रेष्ठार्थसम्पूरणः
सर्वाघौघनिवारणः प्रविलसन्मुद्रादिसम्भूषणः ।
सुग्रीवादिकपीन्द्रमुख्यशरणः कल्याणपूर्णः सदा
यन्त्रोद्धारकनाममारुतिरयं कुर्यात् सदा मङ्गलम् ॥ ८॥

यन्त्रोद्धारकमङ्गलाष्टकमिदं सर्वेष्टसन्दायकं
दुस्तापत्रयवारकं द्विजगणैः सङ्गृह्यमाणं मुदा ।
भक्ताग्रेसरभीमसेनरचितं भक्त्या सदा यः पठेत्
श्रीमद्वायुसुतप्रसादमतुलं प्राप्नोत्यसौ मानवः ॥ ९॥

।। इति श्रीयन्त्रोद्धारकमङ्गलाष्टकम् ।।